चतुर्दश हि वर्षाणि वत्स्यामि विजने वने ।
मधुमूलफलैर्जीवन् हित्वा मुनिवदामिषम् ॥ २९ ॥

भरताय महाराजो यौवराज्यं प्रयच्छति ।
मां पुनर्दण्डकारण्ये विवासयति तापसम् ॥ ३० ॥

स षट् चाष्टौ च वर्षाणि वत्स्यामि विजने वने ।
आसेवमानो वन्यानि फलमूलैश्च वर्तयन् ॥ ३१ ॥

सा निकृत्तेव सालस्य यष्टिः परशुना वने ।
पपात सहसा देवी देवतेव दिवश्च्युता ॥ ३२ ॥

तामदुःखोचितां दृष्ट्वा पतितां कदलीमिव ।
रामस्तूत्थापयामास मातरं गतचेतसम् ॥ ३३ ॥

उपावृत्योत्थितां दीनां बडबामिव वाहिताम् ।
पांसुकुण्ठितसर्वाङ्गीं विममर्श च पाणिना ॥ ३४ ॥

सा राघवमुपासीनमदुःखार्हा सुखोचिता ।
उवाच पुरुषव्याघ्रमुपशृण्वति लक्ष्मणे ॥ ३५ ॥

यदि पुत्र न जायेथा मम शोकाय राघव ।
न स्म दुःखमतो भूयः पश्येयमहमप्रजाः ॥ ३६ ॥

एक एव हि वन्ध्यायाश्शोको भवति मानसः ।
अप्रजाऽस्मीति सन्तापो न ह्यन्यः पुत्र विद्यते ॥ ६७ ॥

न दृष्टपूर्वं कल्याणं सुखं वा पतिपौरुषे ।
अपि पुत्रे विपश्येयमिति रामास्थितं मया ॥ ३८ ॥

सा बहून्यमनोज्ञानि वाक्यानि हृदयच्छिदाम् ।
अहं श्रोष्ये सपत्नीनामवराणां वरा सती ॥ ३९ ॥

अतो दुःखतरं किं नु प्रमदानां भविष्यति ।
मम शोको विलापश्च यादृशोऽयमनन्तकः ॥ ४० ॥

त्वयि संनिहितेऽप्येवमहमासं निराकृता ।
किं पुनः प्रोषिते तात ध्रुवं मरणमेव मे ॥ ४१ ॥

अत्यन्तं निगृहीताऽस्मि भर्तुर्नित्यमसंमता ।
परिवारेण कैकेय्यास्समा वाप्यथवाऽवरा ॥ ४२ ॥

यो हि मां सेवते कश्चिदथवाऽप्यनुवर्तते ।
कैकेय्याः पुत्रमन्वीक्ष्य स जनो नाभिभाषते ॥ ४३ ॥

नित्यक्रोधतया तस्याः कथं नु खरवादि तत् ।
कैकेय्या वदनं द्रष्टुं पुत्र शक्ष्यामि दुर्गता ॥ ४४ ॥

दश सप्त च वर्षाणि तव जातस्य राघव ।
आसितानि प्रकाङ्क्षन्त्या मया दुःखपरिक्षयम् ॥ ४५ ॥

तदक्षयं महद्दुःखं नोत्सहे सहितुं चिरम् ।
विप्रकारं सपत्नीनामेवं जीर्णाऽपि राघव ॥ ४६ ॥

अपश्यन्ती तव मुखं परिपूर्णशशिप्रभम् ।
कृपणा वर्तयिष्यामि कथं कृपणजीविका ॥ ४७ ॥

उपवासैश्च योगैश्च बहुभिश्च परिश्रमैः ।
दुखं संवर्धितो मोघं त्वं हि दुर्गतया मया ॥ ४८ ॥

## एकविंशः सर्गः ॥ २१ ॥

पितृवाक्यपरिपालनप्रतिज्ञा ॥

तथा तु विलपन्तीं तां कौसल्यां राममातरम् ।
उवाच लक्ष्मणो दीनस्तत्कालसदृशं वचः ॥ १ ॥

न रोचते ममाप्येतदार्ये यद्राघवो वनम् ।
त्यक्त्वा राज्यश्रियं गच्छेत् स्त्रिया वाक्यवशं गतः ॥

विपरीतश्च वृद्धश्च विषयैश्च प्रधर्षितः ।
नृपः किमिव न ब्रूयाच्चोद्यमानस्समन्मथः ॥ ३ ॥

नास्यापराधं पश्यामि नापि दोषं तथाविधम् ।
येन निर्वास्यते राष्ट्राद्वनवासाय राघवः ॥ ४ ॥

अहं हनिष्ये पितरं वृद्धं कामवशं गतम् ।
स्त्रिया युक्तं च निर्लज्जं धर्मायुक्तं नृपं यथा ॥ ५ ॥

न तं पश्याम्यहं लोके परोक्षमपि यो नरः ।
स्वमित्रोऽपि निरस्तोऽपि योऽस्य दोषमुदाहरेत् ॥ ६ ॥

देवकल्पमृजुं दान्तं रिपूणामपि वत्सलम् ।
अवेक्षमाणः को धर्मं त्यजेत्पुत्रमकारणात् ॥ ७ ॥

तदिदं वचनं राज्ञः पुनर्बाल्यमुपेयुषः ।
पुत्रः को हृदये कुर्याद्राजवृत्तमनुस्मरन् ॥ ८ ॥

यावदेव न जानाति कश्चिदर्थमिमं नरः ।
तावदेव मया सार्धमात्मस्थं कुरु शासनम् ॥ ९ ॥

मया पार्श्वे सधनुषा तव गुप्तस्य राघव ।
कस्समर्थोऽधिकं कर्तुं कृतान्तस्येव तिष्ठतः ॥ १० ॥

निर्मनुष्यामिमां सर्वामयोध्यां मनुजर्षभ ।
करिष्यामि शरैस्तीक्ष्णैर्यदि स्थास्यति विप्रिये ॥ ११ ॥

भरतस्याथ पक्ष्यो वा यो वास्य हितमिच्छति ।
सर्वानेतान्वधिष्यामि मृदुर्हि परिभूयते ॥ १२ ॥

प्रोत्साहितोऽयं कैकेय्या स दुष्टो यदि नः पिता ।
अमित्रभूतो निस्सङ्गं बध्यतां वध्यतामपि ॥ १३ ॥

गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथं प्रतिपन्नस्य कार्यं भवति शासनम् ॥ १४ ॥

बलमेष किमाश्रित्य हेतुं वा पुरुषोत्तम ।
दातुमिच्छति कैकेय्यै राज्यं स्फीतमिदं तव ॥ १५ ॥

त्वया चैव मया चैव कृत्वा वैरमनुत्तमम् ।
काऽस्य शक्तिः श्रियं दातुं भरतायारिशासन ॥ १६ ॥

अनुरक्तोऽस्मि भावेन भ्रातरं देवि तत्त्वतः ।
सत्येन धनुषा चैव दत्तेनेष्टेन ते शपे ॥ १७ ॥

दीप्तमग्निमरण्यं वा यदि रामः प्रवेक्ष्यति ।
प्रविष्टं तत्र मां देवि त्वं पूर्वमवधारय ॥ १८ ॥

हरामि वीर्याद्दुःखं ते तमः सूर्य इवोदितः ।
देवी पश्यतु मे वीर्यं राघवश्चैव पश्यतु ॥ १९ ॥

हनिष्ये पितरं वृद्धं कैकेय्यासक्तमानसम् ।
कृपणं च स्थितं बाल्ये वृद्धभावेन गर्हितम् ॥ २० ॥

एतत्तु वचनं श्रुत्वा लक्ष्मणस्य महात्मनः ।
उवाच रामं कौसल्या रुदन्ती शोकलालसा ॥ २१ ॥

भ्रातुस्ते वदतः पुत्र लक्ष्मणस्य श्रुतं त्वया ।
यदत्रानन्तरं कार्यं कुरुष्व यदि रोचते ॥ २२ ॥

न चाधर्म्यं वचः श्रुत्वा सपत्न्या मम भाषितम् ।
विहाय शोकसन्तप्तां गन्तुमर्हसि मामितः ॥ २३ ॥

धर्मज्ञ यदि धर्मिष्ठ धर्मं चरितुमिच्छसि ।
शुश्रूष मामिहस्थस्त्वं चर धर्ममनुत्तमम् ॥ २४ ॥

शुश्रूषुर्जननीं पुत्र स्वगृहे नियतो वसन् ।
परेण तपसा युक्तः काश्यपस्त्रिदिवङ्गतः ॥ २५ ॥

यथैव राजा पूज्यस्ते गौरवेण तथा ह्यहम् ।
त्वां नाहमनुजानामि न गन्तव्यमितो वनम् ॥ २६ ॥

त्वद्वियोगान्न मे कार्यं जीवितेन सुखेन वा ।
त्वया सह मम श्रेयस्तृणानामपि भक्षणम् ॥ २७ ॥

यदि त्वं यास्यसि वनं त्यक्त्वा मां शोकलालसाम् ।
अहं प्रायमिहासिष्ये न हि शक्ष्यामि जीवितुम् ॥ २८ ॥

ततस्त्वं प्राप्स्यसे पुत्र निरयं लोकविश्रुतम् ।
ब्रह्महत्यामिवाधर्मात्समुद्रस्सरितां पतिः ॥ २९ ॥

विलपन्तीं तथा दीनां कौसल्यां जननीं ततः ।
उवाच रामो धर्मात्मा वचनं धर्मसंहितम् ॥ ३० ॥

नास्ति शक्तिः पितुर्वाक्यं समतिक्रमितुं मम ।
प्रसादये त्वां शिरसा गन्तुमिच्छाम्यहं वनम् ॥ ३१ ॥

ऋषिणा च पितुर्वाक्यं कुर्वता व्रतचारिणा ।
गौर्हता जानता धर्मं कण्डुनापि विपश्चिता ॥ ३२ ॥

अस्माकं च कुले पूर्वं सगरस्याज्ञया पितुः ।
खनद्भिः सागरैर्भूमिमवाप्तस्सुमहान्वधः ॥ ३३ ॥

जामदग्न्येन रामेण रेणुका जननी स्वयम् ।
कृत्ता परशुनाऽरण्ये पितुर्वचनकारिणा ॥ ३४ ॥

एतैरन्यैश्च बहुभिर्देवि देवसमैः कृतम् ।
पितुर्वचनमक्लीबं करिष्यामि पितुर्हितम् ॥ ३५ ॥

न खल्वेतन्मयैकेन क्रियते पितृशासनम् ।
एतैरपि कृतं देवि ये मया तव कीर्तिताः ॥ ३६ ॥

नाहं धर्ममपूर्वं ते प्रतिकूलं प्रवर्तये ।
पूर्वैरयमभिप्रेतो गतो मार्गोऽनुगम्यते ॥ ३७ ॥

तदेतत्तु मया कार्यं क्रियते भुवि नान्यथा ।
पितुर्हि वचनं कुर्वन्न कश्चिन्नाम हीयते ॥ ३८ ॥

तामेवमुक्त्वा जननीं लक्ष्मणं पुनरब्रवीत् ।
वाक्यं वाक्यविदां श्रेष्ठः श्रेष्ठः सर्वधनुष्मताम् ॥ ३९ ॥

तव लक्ष्मण जानामि मयि स्नेहमनुत्तमम् ।
विक्रमं चैव सत्वं च तेजश्चैव दुरासदम् ॥ ४० ॥

मम मातुर्महद्दुःखमतुलं शुभलक्षण ।
अभिप्रायमविज्ञाय सत्यस्य च शमस्य च ॥ ४१ ॥

धर्मो हि परमो लोके धर्मे सत्यं प्रतिष्ठितम् ।
धर्मसंश्रितमेतच्च पितुर्वचनमुत्तमम् ॥ ४२ ॥

संश्रुत्य च पितुर्वाक्यं मातुर्वा ब्राह्मणस्य वा ।
न कर्तव्यं वृथा वीर धर्ममाश्रित्य तिष्ठता ॥ ४३ ॥

सोऽहं न शक्ष्यामि पितुर्नियोगमतिवर्तितुम् ।
पितुर्हि वचनाद्वीर कैकेय्याऽहं प्रचोदितः ॥ ४४ ॥

तदेतां विसृजानार्यां क्षत्रधर्माश्रितां मतिम् ।
धर्ममाश्रय मा तैक्ष्ण्यं मद्बुद्धिरनुगम्यताम् ॥ ४५ ॥

तमेवमुक्त्वा सौहार्दाद्भ्रातरं लक्ष्मणाग्रजः ।
उवाच भूयः कौसल्यां प्राञ्जलिश्शिरसा नतः ॥ ४६ ॥

अनुमन्यस्व मां देवि गमिष्यन्तमितो वनम् ।
शापिताऽसि मम प्राणैः कुरु स्वस्त्ययनानि मे ॥ ४७ ॥

तीर्णप्रतिज्ञश्च वनात्पुनरेष्याम्यहं पुरीम् ।
ययातिरिव राजर्षिः पुरा हित्वा पुनर्दिवम् ॥ ४८ ॥

शोकःसन्धार्यतां मातर्हृदये साधु मा शुचः ।
वनवासादिहैष्यामि पुनः कृत्वा पितुर्वचः ॥ ४९ ॥

त्वया मया च वैदेह्या लक्ष्मणेन सुमित्रया ।
पितुर्नियोगे स्थातव्यमेष धर्मस्सनातनः ॥ ५० ॥

अम्ब संहृत्य संभारान् दुःखं हृदि निगृह्य च ।
वनवासकृता बुद्धिर्मम धर्म्याऽनुवर्त्यताम् ॥ ५१ ॥

एतद्वचस्तस्य निशम्य माता सुधर्म्यमव्यग्रमविक्लबं च ।
मृतेव संज्ञां प्रतिलभ्य देवी समीक्ष्य रामं पुनरित्युवाच॥

यथैव ते पुत्र पिता तथाऽहं गुरुः स्वधर्मेण सुहृत्तया च ।
न त्वाऽनुजानामि न मां विहाय सुदुःखितामर्हसि गन्तुमेवम्॥

किं जीवितेनेह विना त्वया मे लोकेन वा किं स्वधयाऽमृतेन।
श्रेयो मुहूर्तं तव सन्निधानं ममेह कृत्स्नादपि जीवलोकात् ॥

नरैरिवोल्काभिरपोह्यमानो महागजोऽध्वानमनुप्रविष्टः ।
भूयः प्रजज्वाल विलापमेनं निशम्य रामः करुणं जनन्याः॥

स मातरं चैव विसंज्ञकल्पामार्तं च सौमित्रिमभिप्रतप्तम् ।
धर्मे स्थितो धर्म्यमुवाच वाक्यं यथा स एवार्हति तत्र वक्तुम्॥

अहं हि ते लक्ष्मण नित्यमेव जानामि भक्तिं च पराक्रमं च ।
मम त्वभिप्रायमसंनिरीक्ष्य मात्रा सहाभ्यर्दसि मां सुदुःखम्॥

धर्मार्थकामाः किल तात लोके समीक्षिता धर्मफलोदयेषु ।
ते तत्र सर्वे स्युरसंशयं मे भार्येव वश्याऽभिमता सुपुत्रा ॥

यस्मिंस्तु सर्वे स्युरसंनिविष्टा धर्मो यतः स्यात्तदुपक्रमेत ।
द्वेष्यो भवत्यर्थपरो हि लोके कामात्मता खल्वपि न प्रशस्ता॥

गुरुश्च राजा च पिता च वृद्धः क्रोधात्प्रहर्षाद्यदि वाऽपि मोहात्।
यद्व्यादिशेत्कार्यमवेक्ष्य धर्मं कस्तं न कुर्यादनृशंसवृत्तिः ॥

स वै न शक्नोमि पितुः प्रतिज्ञा-
मिमामकर्तुं सकलां यथावत्।
स ह्यावयोस्तात गुरुर्नियोगे
देव्याश्च भर्ता स गतिः स धर्मः ॥ ६१ ॥

तस्मिन् पुनर्जीवति धर्मराजे विशेषतः स्वे पथि वर्तमाने।
देवी मया सार्धमितोऽपगच्छेत् कथं स्विदन्या विधवेव नारी॥

सा माऽनुमन्यस्व वनं व्रजन्तं कुरुष्व नः स्वस्त्ययनानि देवि।
यथा समाप्ते पुनराव्रजेयं यथा हि सत्येन पुनर्ययातिः ॥

यशो ह्यहं केवलराज्यकारणान्न पृष्ठतः कर्तुमलं महोदयम्।
अदीर्घकाले न तु देवि जीविते वृणेऽवरामद्य महीमधर्मतः ॥

प्रसादयन्नरवृषभः स्वमातरं
पराक्रमाज्जिगमिषुरेव दण्डकान्।
अथानुजं भृशमनुशास्य दर्शनं
चकार तां हृदि जननीं प्रदक्षिणम् ॥ ६५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
अयोध्याकाण्डे एकविंशः सर्गः ॥

आदितः श्लोकाः 3352 अयोध्याकाण्डे आदितः श्लोकाः 977

## द्वाविंशः सर्गः ॥ २२ ॥

### दैवप्राबल्यवर्णनम् ॥

अथ तं व्यथया दीनं सविशेषममर्षितम् ।
श्वसन्तमिव नागेन्द्रं क्रोधविस्फारितेक्षणम् ॥ १ ॥

आसाद्य रामस्सौमित्रिं सुहृदं भ्रातरं प्रियम् ।
उवाचेदं स धैर्येण धारयन् सत्त्वमात्मवान् ॥ २ ॥

निगृह्य रोषं शोकं च धैर्यमाश्रित्य केवलम् ।
अवमानं निरस्येमं गृहीत्वा हर्षमुत्तमम् ॥ ३ ॥

उपक्लृप्तं हि यत्किञ्चिदभिषेकार्थमद्य मे ।
सर्वं विसर्जय क्षिप्रं कुरु कार्यं निरत्ययम् ॥ ४ ॥

सौमित्रे योऽभिषेकार्थे मम संभारसंभ्रमः ।
अभिषेकनिवृत्त्यर्थे सोऽस्तु संभारसंभ्रमः ॥ ५ ॥

यस्या मदभिषेकार्थे मानसं परितप्यते ।
माता मे सा यथा न स्यात् सविशङ्का तथा कुरु ॥ ६ ॥

तस्याः शङ्कामयं दुःखं मुहूर्तमपि नोत्सहे ।
मनसि प्रतिसञ्जातं सौमित्रेऽहमुपेक्षितुम् ॥ ७ ॥

न बुद्धिपूर्वं नाबुद्धं स्मरामिह कदाचन ।
मातृणां वा पितुर्वाहं कृतमल्पं च विप्रियम् ॥ ८ ॥

सत्यः सत्याभिसन्धश्च नित्यं सत्यपराक्रमः ।
परलोकभयाद्भीतो निर्भयोस्तु पिता मम ॥ ९ ॥

तस्यापि हि भवेदस्मिन् कर्मण्यप्रतिसंहृते ।
सत्यं नेति मनस्तापस्तस्य तापस्तपेच्च माम् ॥ १० ॥

अभिषेकविधानन्तु तस्मात्संहृत्य लक्ष्मण ।
अन्वगेवाहमिच्छामि वनं गन्तुमितः पुनः ॥ ११ ॥

मम प्रव्राजनादद्य कृतकृत्या नृपात्मजा ।
सुतं भरतमव्यग्रमभिषेचयिता ततः ॥ १२ ॥

मयि चीराजिनधरे जटामण्डलधारिणि ।
गतेऽरण्यं च कैकेय्या भविष्यति मनस्सुखम् ॥ १३ ॥

बुद्धिः प्रणीता येनेयं मनश्च सुसमाहितम् ।
तं तु नार्हामि संक्लेष्टुं प्रव्रजिष्यामि मा चिरम् ॥ १४ ॥

कृतान्तस्त्वेव सौमित्रे द्रष्टव्यो मत्प्रवासने ।
राज्यस्य च वितीर्णस्य पुनरेव निवर्तने ॥ १५ ॥

कैकेय्याः प्रतिपत्तिर्हि कथं स्यान्मम पीडने ।
यदि भावो न दैवोऽयं कृतान्तविहितो भवेत् ॥ १६ ॥

जानासि हि यथा सौम्य न मातृषु ममान्तरम् ।
भूतपूर्वं विशेषो वा तस्या मयि सुतेऽपि वा ॥ १७ ॥

सोऽभिषेकनिवृत्त्यर्थैः प्रवासार्थैश्च दुर्वचैः ।
उग्रैर्वाक्यैरहं तस्या नान्यद्दैवात्समर्थये ॥ १८ ॥

कथं प्रकृतिसम्पन्ना राजपुत्री तथागुणा ।
ब्रूयात्सुप्राकृतेव स्त्री मत्पीडां भर्तृसन्निधौ ॥ १९ ॥

यदचिन्त्यं तु तद्दैवं भूतेष्वपि न हन्यते ।
व्यक्तं मयि च तस्यां च पतितो हि विपर्ययः ॥ २० ॥

कश्च दैवेन सौमित्रे योद्धुमुत्सहते पुमान् ।
यस्य न ग्रहणं किञ्चित्कर्मणोऽन्यत्र दृश्यते ॥ २१ ॥

सुखदुःखे भयक्रोधौ लाभालाभौ भवाभवौ ।
यच्च किञ्चित्तथाभूतं ननु दैवस्य कर्म तत् ॥ २२ ॥

ऋषयोऽप्युग्रतपसो दैवेनाभिप्रचोदिताः ।
उत्सृज्य नियमांस्तीव्रान् भ्रश्यन्ते काममन्युभिः॥ २३ ॥

असङ्कल्पितमेवेह यदकस्मात्प्रवर्तते ।
निवर्त्यारंभमारब्धं ननु दैवस्य कर्म तत् ॥ २४ ॥

एतया तत्त्वया बुद्ध्या संस्तभ्यात्मानमात्मना ।
व्याहतेऽप्यभिषेके मे परितापो न विद्यते ॥ २५ ॥

तस्मादपरितापः संस्त्वमप्यनुविधाय माम् ।
प्रतिसंहारय क्षिप्रमाभिषेचनिकीं क्रियाम् ॥ २६ ॥

एभिरेव घटैस्सर्वैरभिषेचनसंभृतैः ।
मम लक्ष्मण तापस्ये व्रतस्नानं भविष्यति ॥ २७ ॥

अथवा किं ममैतेन राजद्रव्यमयेन तु ।
उद्धृतं मे स्वयं तोयं व्रतादेशं करिष्यति ॥ २८ ॥

मा च लक्ष्मण सन्तापं कार्षीर्लक्ष्म्या विपर्यये ।
राज्यं वा वनवासो वा वनवासो महोदयः ॥ २९ ॥

न लक्ष्मणास्मिन् खलु कर्मविघ्ने माता यवीयस्यतिशङ्कितव्या ।
दैवाभिपन्ना हि वदत्यनिष्टं जानासि दैवं च तथाप्रभावम् ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
अयोध्याकाण्डे द्वाविंशः सर्गः ॥

आदितः श्लोकाः 3382 अयोध्याकाण्डे आदितः श्लोकाः 1027

## त्रयोविंशः सर्गः ॥ २३ ॥

### लक्ष्मणकोपः ॥

इति ब्रुवति रामे तु लक्ष्मणोऽधश्शिरा मुहुः ।
श्रुत्वा मध्यं जगामेव मनसा दुःखहर्षयोः ॥ १ ॥

तदा तु बद्ध्वा भ्रुकुटीं भ्रुवोर्मध्ये नरर्षभः ।
निशश्वास महासर्पो बिलस्थ इव रोषितः ॥ २ ॥

तस्य दुष्प्रतिवीक्षं तद्भ्रुकुटीसहितं तदा ।
बभौ क्रुद्धस्य सिंहस्य मुखस्य सदृशं मुखम् ॥ ३ ॥

अग्रहस्तं विधुन्वंस्तु हस्तिहस्तमिवात्मनः ।
तिर्यगूर्ध्वं शरीरे च पातयित्वा शिरोधराम् ॥
अग्राक्ष्णा वीक्षमाणस्तु तिर्यग्भ्रातरमब्रवीत् ॥ ४ ॥

अस्थाने संभ्रमो यस्य जातो वै सुमहानयम् ।
धर्मदोषप्रसङ्गेन लोकस्यानतिशङ्कया ॥ ५ ॥

कथं ह्येतदसंभ्रान्तस्त्वद्विधो वक्तुमर्हति ।
यथा दैवमशौण्डीरं शौण्डीर क्षत्रियर्षभ ॥ ६ ॥

किं नाम कृपणं दैवमशक्तमभिशंससि ।
पापयोस्ते कथं नाम तयोः शङ्का न विद्यते ॥ ७ ॥

सन्ति धर्मोपधाः श्लक्ष्णा धर्मात्मन् किं न बुध्यसे ।
तयोस्सुचरितं स्वार्थं शाठ्यात्परिजिहीर्षतोः ॥ ८ ॥

यदि नैवं व्यवसितं स्याद्धि प्रागेव राघव ।
तयोः प्रागेव दत्तश्च स्याद्वरः प्रकृतश्च सः ॥ ९ ॥

लोकविद्विष्टमारब्धं त्वदन्यस्याभिषेचनम् ।
नोत्सहे सहितुं वीर तत्र मे क्षन्तुमर्हसि ॥ १० ॥

येनेयमागता द्वैधं तव बुद्धिर्महामते ।
स हि धर्मो मम द्वेष्यः प्रसङ्गाद्यस्य मुह्यसि ॥ ११ ॥

कथं त्वं कर्मणा शक्तः कैकेयीवशवर्तिनः ।
करिष्यसि पितुर्वाक्यमधर्मिष्ठं विगर्हितम् ॥ १२ ॥

यद्ययं किल्बिषाद्भेदः कृतोऽप्येवं न गृह्यते ।
जायते तत्र मे दुःखं धर्मसङ्गश्च गर्हितः
तवायं धर्मसंयोगो लोकस्यास्य विगर्हितः ॥ १३ ॥

मनसाऽपि कथं कामं कुर्यास्त्वं कामवृत्तयोः ।
तयोस्त्वहितयोर्नित्यं शत्र्वोः पित्रभिधानयोः ॥ १४ ॥

यद्यपि प्रतिपत्तिस्ते दैवी चापि तयोर्मतम् ।
तथाऽप्युपेक्षणीयं ते न मे तदपि रोचते ॥ १५ ॥

विक्लबो वीर्यहीनो यः स दैवमनुवर्तते ।
वीरास्संभावितात्मानो न दैवं पर्युपासते ॥ १६ ॥

दैवं पुरुषकारेण यस्समर्थः प्रबाधितुम् ।
न दैवेन विपन्नार्थः पुरुषस्सोऽवसीदति ॥ १७ ॥

द्रक्ष्यन्ति त्वद्य दैवस्य पौरुषं पुरुषस्य च ।
दैवमानुषयोरद्य व्यक्ता व्यक्तिर्भविष्यति ॥ १८ ॥

अद्य मत्पौरुषहतं दैवं द्रक्ष्यन्ति वै जनाः ।
यद्दैवादाहतं तेऽद्य दृष्टं राज्याभिषेचनम् ॥ १९ ॥

अत्यङ्कुशमिवोद्दामं गजं मदबलोद्धतम् ।
प्रधावितमहं दैवं पौरुषेण निवर्तये ॥ २० ॥

लोकपालास्समस्तास्ते नाद्य रामाभिषेचनम् ।
न च कृत्स्नास्त्रयो लोका विहन्युः किं पुनः पिता ॥

यैर्विवासस्तवारण्ये मिथो राजन् समर्थितः ।
अरण्ये ते विवत्स्यन्ति चतुर्दश समास्तथा ॥ २२ ॥

अहं तदाशां छेत्स्यामि पितुस्तस्याश्च या तव ।
अभिषेकविघातेन पुत्रराज्याय वर्तते ॥ २३ ॥

मद्बलेन विरुद्धाय न स्याद्दैवबलं तथा ।
प्रभविष्यति दुःखाय यथोग्रं पौरुषं मम ॥ २४ ॥

ऊर्ध्वं वर्षसहस्रान्ते प्रजापाल्यमनन्तरम् ।
आर्यपुत्राः करिष्यन्ति वनवासं गते त्वयि ॥ २५ ॥

पूर्वराजर्षिवृत्त्या हि वनवासो विधीयते ।
प्रजा निक्षिप्य पुत्रेषु पुत्रवत्परिपालने ॥ २६ ॥

स चेद्राजन्यनेकाग्रे राज्यविभ्रमशङ्कया ।
नैवमिच्छसि धर्मात्मन्राज्यं राम त्वमात्मनि ॥ २७ ॥

प्रतिजाने च ते वीर मा भूवं वीरलोकभाक् ।
राज्यं च तव रक्षेयमहं वेलेव सागरम् ॥ २८ ॥

मङ्गलैरभिषिञ्चस्व तत्र त्वं व्यापृतो भव । ॥ २९ ॥

अहमेको महीपालानलं वारयितुं बलात् ॥ ३० ॥

न शोभार्थाविमौ बाहू न धनुर्भूषणाय मे ।
नासिराबन्धनार्थाय न शराः स्तम्भहेतवः ॥
अमित्रदमनार्थं मे सर्वमेतच्चतुष्टयम् ॥ ३१ ॥

न चाहं कामयेऽत्यर्थं यः स्याच्छत्रुर्मतो मम ।
असिना तीक्ष्णधारेण विद्युच्चलितवर्चसा ॥ ३२ ॥

प्रगृहीतेन वै शत्रुं वज्रिणं वा न कल्पये ॥ ३३ ॥

खड्गनिष्पेषनिष्पिष्टैर्गहना दुश्चरा च मे ।
हस्त्यश्वनरहस्तोरुशिरोभिर्भविता मही ॥ ३४ ॥

खड्गधाराहता मेऽद्य दीप्यमाना इवाद्रयः ।
पतिष्यन्ति द्विपा भूमौ मेघा इव सविद्युतः ॥ ३५ ॥

बद्धगोधाङ्गुलित्राणे प्रगृहीतशरासने ।
कथं पुरुषमानी स्यात्पुरुषाणां मयि स्थिते ॥ ३६ ॥
बहुभिश्चैकमत्यस्यन्नेकेन च बहूञ्जनान् ।
विनियोक्ष्याम्यहं बाणान् नृवाजिगजमर्मसु ॥ ३७ ॥
अद्य मेऽस्त्रप्रभावस्य प्रभावः प्रसरिष्यति ।
राज्ञश्चाप्रभुतां कर्तुं प्रभुत्वं तव च प्रभो ॥ ३८ ॥
अद्य चन्दनसारस्य केयूरामोक्षणस्य च ।
वसूनां च विमोक्षस्य सुहृदां पालनस्य च ॥ ३९ ॥
अनुरूपाविमौ बाहू राम कर्म करिष्यतः ।
अभिषेचनविघ्नस्य कर्तॄणां ते निवारणे ॥ ४० ॥

ब्रवीहि कोऽद्यैव मया वियुज्यतां
तवासुहृत्प्राणयशःसुहृज्जनैः ।
यथा तवेयं वसुधा वशे भवे-
त्तथैव मां शाधि तवास्मि किङ्करः ॥ ४१ ॥

विमृज्य बाष्पं परिसान्त्व्य चासकृत्
स लक्ष्मणं राघववंशवर्धनः ।
उवाच पित्र्ये वचने व्यवस्थितं
निबोध मामेव हि सौम्य सत्पथे ॥ ४२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
अयोध्याकाण्डे त्रयोविंशः सर्गः ॥

आदितः श्लोकाः **3424** अयोध्याकाण्डे आदितः श्लोकाः **1069**

## चतुर्विंशः सर्गः ॥ २४ ॥

### कौसल्याप्रतिबोधनम् ॥

तं समीक्ष्य त्ववहितं पितुर्निर्देशपालने ।
कौसल्या बाष्पसंरुद्धा वचो धर्मिष्ठमब्रवीत् ॥ १ ॥

अदृष्टदुःखो धर्मात्मा सर्वभूतप्रियंवदः ।
मयि जातो दशरथात्कथमुञ्छेन वर्तयेत् ॥ २ ॥

यस्य भृत्याश्च दासाश्च मृष्टान्यन्नानि भुञ्जते ।
कथं स भोक्ष्यते नाथो वने मूलफलान्ययम् ॥ ३ ॥

क एतच्छ्रद्दधेच्छ्रुत्वा कस्य वा न भवेद्भयम् ।
गुणवान्दयितो राज्ञो राघवो यद्विवास्यते ॥ ४ ॥

नूनं तु बलवांल्लोके कृतान्तस्सर्वमादिशेत् ।
लोके रामाभिरामस्त्वं वनं यत्र गमिष्यसि ॥ ५ ॥

अयं तु मामात्मभवस्तवादर्शनमारुतः ।
विलापदुःखसमिधो रुदिताश्रुहुताहुतिः ।
चिन्ताबाष्पमहाधूमस्तवादर्शनचित्तजः ॥ ६ ॥

कर्शयित्वाऽधिकं पुत्र निश्वासायाससंभवः ।
त्वया विहीनामिह मां शोकाग्निरतुलो महान् ।
प्रधक्ष्यति यथा कक्षं चित्रभानुर्हिमात्यये ॥ ७ ॥

कथं हि धेनुः स्वं वत्सं गच्छन्तं नानुगच्छति ।
अहं त्वाऽनुगमिष्यामि यत्र पुत्र गमिष्यसि ॥ ८ ॥

तथा निगदितं मात्रा तद्वाक्यं पुरुषर्षभः ।
श्रुत्वा रामोऽब्रवीद्वाक्यं मातरं भृशदुःखिताम् ॥ ९ ॥

कैकेय्या वञ्चितो राजा मयि चारण्यमाश्रिते ।
भवत्या च परित्यक्तो न नूनं वर्तयिष्यति ॥ १० ॥

भर्तुः किल परित्यागो नृशंसः केवलं स्त्रियाः ।
स भवत्या न कर्तव्यो मनसाऽपि विगर्हितः ॥ ११ ॥

यावज्जीवति काकुत्स्थः पिता मे जगतीपतिः ।
शुश्रूषा क्रियतां तावत्स हि धर्मस्सनातनः ॥ १२ ॥

एवमुक्ता तु रामेण कौसल्या शुभदर्शना ।
तथेत्युवाच सुप्रीता राममक्लिष्टकारिणम् ॥ १३ ॥

एवमुक्तस्तु वचनं रामो धर्मभृतां वरः ।
भूयस्तामब्रवीद्वाक्यं मातरं भृशदुःखिताम् ॥ १४ ॥

मया चैव भवत्या च कर्तव्यं वचनं पितुः ।
राजा भर्ता गुरुः श्रेष्ठस्सर्वेषामीश्वरः प्रभुः ॥ १५ ॥

इमानि तु महारण्ये विहृत्य नव पञ्च च ।
वर्षाणि परमप्रीतः स्थास्यामि वचने तव ॥ १६ ॥

एवमुक्ता प्रियं पुत्रं बाष्पपूर्णानना तदा ।
उवाच परमार्ता तु कौसल्या पुत्रवत्सला ॥ १७ ॥

आसां राम सपत्नीनां मध्ये वस्तुं न मे क्षमम् ।
नय मामपि काकुत्स्थ वनं वन्यां मृगीं यथा
यदि ते गमने बुद्धिः कृता पितुरपेक्षया ॥ १८ ॥

तां तथा रुदतीं रामो रुदन् वचनमब्रवीत् ।
जीवन्त्या हि स्त्रिया भर्ता दैवतं प्रभुरेव च ।
भवत्या मम चैवाद्य राजा प्रभवति प्रभुः ॥ १९ ॥

न ह्यनाथा वयं राज्ञा लोकनाथेन धीमता ।
भरतश्चापि धर्मात्मा सर्वभूतप्रियंवदः ।
भवतीमनुवर्तेत स हि धर्मरतः सदा ॥ २० ॥

यथा मयि तु निष्क्रान्ते पुत्रशोकेन पार्थिवः ।
श्रमं नावाप्नुयात्किंचिदप्रमत्ता तथा कुरु ॥ २१ ॥

दारुणश्चाप्ययं शोको यथैनं न विनाशयेत् ।
राज्ञो वृद्धस्य सततं हितं चर समाहिता ॥ २२ ॥

व्रतोपवासनिरता या नारी परमोत्तमा ।
भर्तारं नानुवर्तेत सा च पापगतिर्भवेत् ॥ २३ ॥

भर्तुः शुश्रूषया नारी लभते स्वर्गमुत्तमम् ।
अपि या निर्नमस्कारा निवृत्ता देवपूजनात् ॥ २४ ॥

शुश्रूषामेव कुर्वीत भर्तुः प्रियहिते रता ।
एष धर्मः पुरा दृष्टो लोके वेदे श्रुतः स्मृतः ॥ २५ ॥

अग्निकार्येष्ववहितास्सुमनोभिश्च देवताः ।
पूज्यास्ते मत्कृते देवि ब्राह्मणाश्चैव सत्कृताः ॥ २६ ॥

एवं कालं प्रतीक्षस्व ममागमनकाङ्क्षिणी ।
नियता नियताहारा भर्तृशुश्रूषणे रता ॥ २७ ॥

प्राप्स्यसे परमं कामं मयि प्रत्यागते सति ।
यदि धर्मभृतां श्रेष्ठो धारयिष्यति जीवितम् ॥ २८ ॥

एवमुक्ता तु रामेण बाष्पपूर्णायतेक्षणा ।
कौसल्या पुत्रशोकार्ता रामं वचनमब्रवीत् ॥ २९ ॥

गमने सुकृतां बुद्धिं न ते शक्नोमि पुत्रक ।
विनिवर्तयितुं वीर नूनं कालो दुरत्ययः ॥ ३० ॥

गच्छ पुत्र त्वमेकाग्रो भद्रं तेऽस्तु सदा विभो ।
पुनस्त्वयि निवृत्ते तु भविष्यामि गतक्लमा ॥ ३१ ॥

प्रत्यागते महाभागे कृतार्थे चरितव्रते ।
पितुरानृण्यतां प्राप्ते त्वयि लप्स्ये परं सुखम् ॥ ३२ ॥

कृतान्तस्य गतिः पुत्र दुर्विभाव्या सदा भुवि ।
यस्त्वां संचोदयति मे वच आच्छिद्य राघव ॥ ३३ ॥

गच्छेदानीं महाबाहो क्षेमेण पुनरागतः ।
नन्दयिष्यसि मां पुत्र साम्ना श्लक्ष्णेन चारुणा ॥ ३४ ॥

अपीदानीं स कालःस्याद्वनात्प्रत्यागतं पुनः ।
येन त्वां पुत्र पश्येयं जटावल्कलधारिणम् ॥ ३५ ॥

तथा हि रामं वनवासनिश्चितं समीक्ष्य देवी परमेण चेतसा ।
उवाच रामं शुभलक्षणं वचो बभूव च स्वस्त्ययनाभिकाङ्क्षिणी ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
अयोध्याकाण्डे चतुर्विंशः सर्गः ॥

आदितः श्लोकाः 3460 अयोध्याकाण्डे आदितः श्लोकाः 1105

## पञ्चविंशः सर्गः ॥ २५ ॥

### मात्राशीःपरिग्रहः ॥

साऽपनीय तमायासमुपस्पृश्य जलं शुचिः ।
चकार माता रामस्य मङ्गलानि मनस्विनी ॥ १ ॥

न शक्यसे वारयितुं गच्छेदानीं रघूत्तम ।
शीघ्रं च विनिवर्तस्व वर्तस्व च सतां पथि ॥ २ ॥

यं पालयसि धर्मं त्वं धृत्या च नियमेन च ।
स वै राघवशार्दूल धर्मस्त्वामभिरक्षतु ॥ ३ ॥

येभ्यः प्रणमसे पुत्र चैत्येष्वायतनेषु च ।
ते च त्वामभिरक्षन्तु वने सह महर्षिभिः ॥ ४ ॥

यानि दत्तानि तेऽस्त्राणि विश्वामित्रेण धीमता ।
तानि त्वामभिरक्षन्तु गुणैः समुदितं सदा ॥ ५ ॥

पितृशुश्रूषया पुत्र मातृशुश्रूषया तथा ।
सत्येन च महाबाहो चिरं जीवाभिरक्षितः ॥ ६ ॥

समित्कुशपवित्राणि वेद्यश्चायतनानि च ।
स्थण्डिलानि पवित्राणि शैला वृक्षाः क्षुपा ह्रदाः ।
पतङ्गाः पन्नगाः सिंहास्त्वां रक्षन्तु नरोत्तम ॥ ७ ॥

स्वस्ति साध्याश्च विश्वे च मरुतश्च महर्षयः ।
स्वस्ति धाता विधाता च स्वस्ति पूषा भगोऽर्यमा ॥ ८ ॥

लोकपालाश्च ते सर्वे वासवप्रमुखास्तथा ।
ऋतवश्चैव पक्षाश्च मासास्संवत्सराः क्षपाः ॥ ९ ॥

दिनानि च मुहूर्ताश्च स्वस्ति कुर्वन्तु ते सदा ।
स्मृतिर्धृतिश्च धर्मश्च पान्तु त्वां पुत्र सर्वतः ॥ १० ॥

स्कन्दश्च भगवान्देवस्सोमश्चेन्द्रो बृहस्पतिः ।
सप्तर्षयो नारदश्च ते त्वां रक्षन्तु सर्वतः ॥ ११ ॥

ते चापि सर्वतः सिद्धा दिशश्च सदिगीश्वराः ।
स्तुता मया वने तस्मिन्पान्तु त्वां पुत्र सर्वशः ॥ १२ ॥

शैलास्सर्वे समुद्राश्च राजा वरुण एव च ।
द्यौरन्तरिक्षं पृथिवी नद्यस्सर्वास्तथैव च ॥ १३ ॥

नक्षत्राणि च सर्वाणि ग्रहाश्च सहदेवताः ।
अहोरात्रे तथा सन्ध्ये पान्तु त्वां वनमाश्रितम् ॥ १४ ॥

ऋतवश्चैव षट्पुण्या मासास्संवत्सरास्तथा ।
कलाश्च काष्ठाश्च तथा तव शर्म दिशन्तु ते ॥ १७ ॥

महावने विचरतो मुनिवेषस्य धीमतः ।
तवादित्याश्च दैत्याश्च भवन्तु सुखदास्सदा ॥ १६ ॥

राक्षसानां पिशाचानां दैत्यानां क्रूरकर्मणाम् ।
क्रव्यादानां च सर्वेषां मा भूत्पुत्रक ते भयम् ॥ १७ ॥

प्लवगा वृश्चिका दंशा मशकाश्चैव कानने ।
सरीसृपाश्च कीटाश्च मा भूवन् गहने तव ॥ १८ ॥

महाद्विपाश्च सिंहाश्च व्याघ्रा ऋक्षाश्च दंष्ट्रिणः ।
महिषाश्शृङ्गिणो रौद्रा न ते द्रुह्यन्ति पुत्रक ॥ १९ ॥

नृमांसभोजना रौद्रा ये चान्ये सत्त्वजातयः ।
मा च त्वां हिंसिषुः पुत्र मया संपूजितास्त्विह ॥ २० ॥

आगमास्ते शिवास्सन्तु सिध्यन्तु च पराक्रमाः ।
सर्वसम्पत्तये राम स्वस्तिमान् गच्छ पुत्रक ॥ २१ ॥

स्वस्ति तेऽस्त्वान्तरिक्षेभ्यः पार्थिवेभ्यः पुनः पुनः ।
सर्वेभ्यश्चैव देवेभ्यो ये च ते परिपन्थिनः ॥ २२ ॥

शुक्रस्सोमश्च सूर्यश्च धनदोऽथ यमस्तथा ।
पान्तु त्वामर्चिता राम दण्डकारण्यवासिनम् ॥ २३ ॥

अग्निर्वायुस्तथा धूमो मन्त्राश्चर्षिमुखाच्च्युताः ।
उपस्पर्शनकाले तु पान्तु त्वां रघुनन्दन ॥ २४ ॥

सर्वलोकप्रभुर्ब्रह्मा भूतभर्ता तथार्षयः ।
ये च शेषास्सुरास्ते त्वां रक्षन्तु वनवासिनम् ॥ २५ ॥

इति माल्यैस्सुरगणान्गन्धैश्चापि यशस्विनी ।
स्तुतिभिश्चानुकूलाभिरानर्चायतलोचना ॥ २६ ॥

ज्वलनं समुपादाय ब्राह्मणेन महात्मना ।
हावयामास विधिना राममङ्गलकारणात् ॥ २७ ॥

घृतं श्वेतानि माल्यानि समिधः श्वेतसर्षपान् ।
उपसम्पादयामास कौसल्या परमाङ्गना ॥ २८ ॥

उपाध्यायस्स विधिना हुत्वा शान्तिमनामयम् ।
हुतहव्यावशेषेण बाह्यं बलिमकल्पयत् ॥ २९ ॥

मधुदध्यक्षतघृतैः स्वस्ति वाच्य द्विजांस्ततः ।
वाचयामास रामस्य वने स्वस्त्ययनक्रियाम् ॥ ३० ॥

ततस्तस्मै द्विजेन्द्राय राममाता यशस्विनी ।
दक्षिणां प्रददौ रामं वचनं चेदमब्रवीत् ॥ ३१ ॥

यन्मङ्गलं सहस्राक्षे सर्वदेवनमस्कृते ।
वृत्रनाशे समभवत्तत्ते भवतु मङ्गलम् ॥ ३२ ॥

यन्मङ्गलं सुपर्णस्य विनताऽकल्पयत्पुरा ।
अमृतं प्रार्थयानस्य तत्ते भवतु मङ्गलम् ॥ ३३ ॥

अमृतोत्पादने दैत्यान्घ्नतो वज्रधरस्य यत् ।
अदितिर्मङ्गलं प्रादात्तत्ते भवतु मङ्गलम् ॥ ३४ ॥

त्रीन्विक्रमान्प्रक्रमतो विष्णोरमिततेजसः ।
यदासीन्मङ्गलं राम तत्ते भवतु मङ्गलम् ॥ ३५ ॥

ऋतवस्सागरा द्वीपा वेदा लोका दिशश्च ते ।
मङ्गलानि महाबाहो दिशन्तु तव कानने ॥ ३६ ॥

मङ्गलं भगवान्विष्णुर्मङ्गलं मधुसूदनः ।
मङ्गलं पुण्डरीकाक्षो मङ्गलं गरुडध्वजः ॥ ३७ ॥

इति पुत्रस्य शेषांश्च कृत्वा शिरसि भामिनी ।
उवाचातिप्रहृष्टेव सा दुःखवशवर्तिनी ।
गन्धैश्चापि समालभ्य राममायतलोचना ॥ ३८ ॥

ओषधीं चापि सिद्धार्थां विशल्यकरणीं शुभाम् ।
चकार रक्षां कौसल्या मन्त्रैरभिजजाप च ।
वाङ्मात्रेण न भावेन वाचाऽसंसज्जमानया ॥ ३९ ॥
आनम्य मूर्ध्नि चाघ्राय परिष्वज्य यशस्विनी ।
अवदत्पुत्र सिद्धार्थो गच्छ राम यथासुखम् ॥ ४० ॥
अरोगं सर्वसिद्धार्थमयोध्यां पुनरागतम् ।
द्रक्ष्यामि त्वामहं वत्स सुस्थितं राजवर्त्मनि ॥ ४१ ॥
प्रनष्टदुःखसङ्कल्पा हर्षविद्योतितानना ।
द्रक्ष्यामि त्वां वनात्प्राप्तं पूर्णचन्द्रमिवोदितम् ॥ ४२ ॥
भद्रासनगतं राम वनवासादिहागतम् ।
द्रक्ष्यामि त्वामहं वत्स तीर्णवन्तं पितुर्वचः ॥ ४३ ॥
मङ्गलैरुपसम्पन्नो वनवासादिहागतः ।
वध्वा मम च नित्यं त्वं कामान्संवर्धय प्रभो ॥ ४४ ॥

मयाऽर्चिता देवगणाश्शिवादयो महर्षयो भूतमहासुरोरगाः ।
अभिप्रयातस्य वनं चिराय ते हितानि काङ्क्षन्तु दिशश्च राघव ॥
इतीव चाश्रुप्रतिपूर्णलोचना समाप्य च स्वस्त्ययनं यथाविधि ।
प्रदक्षिणं चैव चकार राघवं पुनः पुनश्चापि निपीड्य सस्वजे ॥
तथा तु देव्या स कृतप्रदक्षिणो निपीड्य मातुश्चरणौ पुनः पुनः ।
जगाम सीतानिलयं महायशाः सराघवः प्रज्वलितःस्वयाश्रिया॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
अयोध्याकाण्डे पञ्चविंशः सर्गः ॥

आदितः श्लोकाः 3507. अयोध्याकाण्डे आदितः श्लोकाः 1152.

## षड्विंशः सर्गः ॥ २६ ॥

### श्रीरामकृतसीतोपदेशः ॥

अभिवाद्य च कौसल्यां रामस्संप्रस्थितो वनम् ।
कृतस्वस्त्ययनो मात्रा धर्मिष्ठे वर्त्मनि स्थितः ॥ १ ॥

विराजयन्राजसुतो राजमार्गं नरैर्वृतम् ।
हृदयान्याममन्थेव जनस्य गुणवत्तया ॥ २ ॥

वैदेही चापि तत्सर्वं न शुश्राव तपस्विनी ।
तदेव हृदि तस्याश्च यौवराज्याभिषेचनम् ॥ ३ ॥

देवकार्यं स्म सा कृत्वा कृतज्ञा हृष्टचेतना ।
अभिज्ञा राजधर्माणां राजपुत्रं प्रतीक्षते ॥ ४ ॥

प्रविवेशाथ रामस्तु स्ववेश्म सुविभूषितम् ।
प्रहृष्टजनसम्पूर्णं ह्रिया किञ्चिदवाङ्मुखः ॥ ५ ॥

अथ सीता समुत्पत्य वेपमाना च तं पतिम् ।
अपश्यच्छोकसन्तप्तं चिन्ताव्याकुलितेन्द्रियम् ॥ ६ ॥

तां दृष्ट्वा स हि धर्मात्मा न शशाक मनोगतम् ।
तं शोकं राघवस्सोढुं ततो विवृततां गतः ॥ ७ ॥

विवर्णवदनं दृष्ट्वा तं प्रस्विन्नममर्षणम् ।
आह दुःखाभिसन्तप्ता किमिदानीमिदं प्रभो ॥ ८ ॥

अद्य बार्हस्पतः श्रीमानुक्तः पुष्यो नु राघव ।
प्रोच्यते ब्राह्मणैः प्राज्ञैः केन त्वमसि दुर्मनाः ॥ ९ ॥

न ते शतशलाकेन जलफेननिभेन च ।
आवृतं वदनं वल्गु छत्रेणाभिविराजते ॥ १० ॥

व्यजनाभ्यां च मुख्याभ्यां शतपत्रनिभेक्षणम् ।
चन्द्रहंसप्रकाशाभ्यां वीज्यते न तवाननम् ॥ ११ ॥

वाग्मिनो वन्दिनश्चापि प्रहृष्टास्त्वां नरर्षभ ।
स्तुवन्तो नाद्य दृश्यन्ते मङ्गलैस्सूतमागधाः ॥ १२ ॥

न ते क्षौद्रं च दधि च ब्राह्मणा वेदपारगाः ।
मूर्ध्नि मूर्धाभिषिक्तस्य दधति स्म विधानतः ॥ १३ ॥

न त्वा प्रकृतयस्सर्वाः श्रेणीमुख्याश्च भूषिताः ।
अनुव्रजितुमिच्छन्ति पौरजानपदास्तथा ॥ १४ ॥

चतुर्भिर्वेगसम्पन्नैर्हयैः काञ्चनभूषितैः ।
मुख्यः पुष्यरथो युक्तः किं न गच्छति तेऽग्रतः ॥ १५ ॥

न हस्ती चाग्रतः श्रीमांस्तव लक्षणपूजितः ।
प्रयाणे लक्ष्यते वीर कृष्णमेघगिरिप्रभः ॥ १६ ॥

न च काञ्चनचित्रं ते पश्यामि प्रियदर्शन ।
भद्रासनं पुरस्कृत्य यान्तं वीरपुरस्सरम् ॥ १७ ॥

अभिषेको यदा सज्जः किमिदानीमिदं तव ।
अपूर्वो मुखवर्णश्च न प्रहर्षश्च लक्ष्यते ॥ १८ ॥

इतीव विलपन्तीं तां प्रोवाच रघुनन्दनः ।
सीते तत्रभवांस्तातः प्रव्राजयति मां वनम् ॥ १९ ॥

कुले महति संभूते धर्मज्ञे धर्मचारिणि ।
शृणु जानकि येनेदं क्रमेणाभ्यागतं मम ॥ २० ॥

राज्ञा सत्यप्रतिज्ञेन पित्रा दशरथेन मे ।
कैकेय्यै प्रीतमनसा पुरा दत्तौ महावरौ ॥ २१ ॥

तयाऽद्य मम सज्जेऽस्मिन्नभिषेके नृपोद्यते ।
प्रचोदितस्ससमयो धर्मेण प्रतिनिर्जितः ॥ २२ ॥

चतुर्दश हि वर्षाणि वस्तव्यं दण्डके मया ।
पित्रा मे भरतश्चापि यौवराज्ये नियोजितः ॥ २३ ॥

सोऽहं त्वामागतो द्रष्टुं प्रस्थितो विजनं वनम् ।
भरतस्य समीपे तु नाहं कथ्यः कदाचन ॥ २४ ॥

ऋद्धियुक्ता हि पुरुषा न सहन्ते परस्तवम् ।
तस्मान्न ते कथाः कथ्या भरतस्याग्रतो मम ॥ २५ ॥

नापि त्वं तेन भर्तव्या विशेषेण कदाचन ।
अनुकूलतया शक्यं समीपे तस्य वर्तितुम् ॥ २६ ॥

तस्मै दत्तं नृपतिना यौवराज्यं सनातनम् ।
स प्रसाद्यस्त्वया सीते नृपतिश्च विशेषतः ॥ २७ ॥

अहं चापि प्रतिज्ञां तां गुरोस्समनुपालयन् ।
वनमद्यैव यास्यामि स्थिरीभव मनस्विनि ॥ २८ ॥

याते च मयि कल्याणि वनं मुनिनिषेवितम् ।
व्रतोपवासरतया भवितव्यं त्वयाऽनघे ॥ २९ ॥

काल्यमुत्थाय देवानां कृत्वा पूजां यथाविधि ।
वन्दितव्यो दशरथः पिता मम जनेश्वरः ॥ ३० ॥
माता च मम कौसल्या वृद्धा सन्तापकर्शिता ।
धर्ममेवाग्रतः कृत्वा त्वत्तस्संमानमर्हति ॥ ३१ ॥
वन्दितव्यास्त्वया नित्यं याः शेषा मम मातरः ।
स्नेहप्रणयसंभोगैः समा हि मम मातरः ॥ ३२ ॥
भ्रातृपुत्रसमौ चापि द्रष्टव्यौ च विशेषतः ।
उभौ भरतशत्रुघ्नौ प्राणैः प्रियतरौ मम ॥ ३३ ॥
विप्रियं न च कर्तव्यं भरतस्य कदाचन ।
स हि राजा प्रभुश्चैव देशस्य च कुलस्य च ॥ ३४ ॥
आराधिता हि शीलेन प्रयत्नैश्चोपसेविताः ।
राजानः संप्रसीदन्ति प्रकुप्यन्ति विपर्यये ॥ ३५ ॥
औरसानपि पुत्रान् हि त्यजन्त्यहितकारिणः ।
समर्थान् संप्रगृह्णन्ति परानपि नराधिपाः ॥ ३६ ॥
सा त्वं वसेह कल्याणि राज्ञस्समनुवर्तिनी ।
भरतस्य रता धर्मे सत्यव्रतपरायणा ॥ ३७ ॥

अहं गमिष्यामि महावनं प्रिये त्वया हि वस्तव्यमिहैव भामिनि ।
यथा व्यलीकं कुरुषे न कस्यचित्तथा त्वया कार्यमिदं वचो मम ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
अयोध्याकाण्डे षड्विंशः सर्गः ॥

आदितः श्लोकाः 3545 अयोध्याकाण्डे आदितः श्लोकाः 1190

## सप्तविंशः सर्गः ॥ २७ ॥

### सीतया वननयनप्रार्थना ॥

एवमुक्ता तु वैदेही प्रियार्हा प्रियवादिनी ।
प्रणयादेव संक्रुद्धा भर्तारमिदमब्रवीत् ॥ १ ॥

किमिदं भाषसे राम वाक्यं लघुतया ध्रुवम् ।
त्वया यदपहास्यं मे श्रुतं नरवरोत्तम ॥ २ ॥

आर्यपुत्र पिता माता भ्राता पुत्रस्तथा स्नुषा ।
स्वानि पुण्यानि भुञ्जानाः स्वं स्वं भाग्यमुपासते ॥ ३ ॥

भर्तुर्भाग्यन्तु नार्येका प्राप्नोति पुरुषर्षभ ।
अतश्चैवाहमादिष्टा वने वस्तव्यमित्यपि ॥ ४ ॥

न पिता नात्मजो नात्मा न माता न सखीजनः ।
इह प्रेत्य च नारीणां पतिरेको गतिस्सदा ॥ ५ ॥

यदि त्वं प्रस्थितो दुर्गं वनमद्यैव राघव ।
अग्रतस्ते गमिष्यामि मृद्नन्ती कुशकण्टकान् ॥ ६ ॥

ईर्ष्यारोषौ बहिष्कृत्य पीतशेषमिवोदकम् ।
नय मां वीर विस्रब्धः पापं मयि न विद्यते ॥ ७ ॥

प्रासादाग्रैर्विमानैर्वा वैहायसगतेन वा ।
सर्वावस्थागता भर्तुः पादच्छाया विशिष्यते ॥ ८ ॥

अनुशिष्टाऽस्मि मात्रा च पित्रा च विविधाश्रयम् ।
नास्मि संप्रति वक्तव्या वर्तितव्यं यथा मया ॥ ९ ॥

अहं दुर्गं गमिष्यामि वनं पुरुषवर्जितम् ।
नानामृगगणाकीर्णं शार्दूलगणसेवितम् ॥ १० ॥

सुखं वने निवत्स्यामि यथैव भवने पितुः ।
अचिन्तयन्ती त्रीन् लोकांश्चिन्तयन्ती पतिव्रतम् ॥ ११ ॥

शुश्रूषमाणा ते नित्यं नियता ब्रह्मचारिणी ।
सह रंस्ये त्वया वीर वनेषु मधुगन्धिषु ॥ १२ ॥

त्वं हि कर्तुं वने शक्तो राम संपरिपालनम् ।
अन्यस्यापि जनस्येह किं पुनर्मम मानद ॥ १३ ॥

सह त्वया गमिष्यामि वनमद्य न संशयः ।
नाहं शक्या महाभाग निवर्तयितुमुद्यता ॥ १४ ॥

फलमूलाशना नित्यं भविष्यामि न संशयः ।
न ते दुःखं करिष्यामि निवसन्ती सह त्वया ॥ १५ ॥

इच्छामि सरितः शैलान्पल्वलानि वनानि च ।
द्रष्टुं सर्वत्र निर्भीता त्वया नाथेन धीमता ॥ १६ ॥

हंसकारण्डवाकीर्णाः पद्मिनीस्साधुपुष्पिताः ।
इच्छेयं सुखिनी द्रष्टुं त्वया वीरेण सङ्गता ॥ १७ ॥

अभिषेकं करिष्यामि तासु नित्यं यतव्रता ।
सह त्वया विशालाक्ष रंस्ये परमनन्दिनी ॥ १८ ॥

एवं वर्षसहस्राणां शतं वाऽहं त्वया सह ।
व्यतिक्रमं न वेत्स्यामि स्वर्गोऽपि न हि मे मतः ॥ १९ ॥

स्वर्गेऽपि च विना वासो भविता यदि राघव ।
त्वया मम नरव्याघ्र नाहं तमपि रोचये ॥ २० ॥

अहं गमिष्यामि वनं सुदुर्गमं
मृगायुतं वानरवारणैर्युतम् ।
वनेऽपि वत्स्यामि यथा पितुर्गृहे
तवैव पादावुपगृह्य सर्वदा ॥ २१ ॥

अनन्यभावामनुरक्तचेतसं
त्वया वियुक्तां मरणाय निश्चिताम् ।
नयस्व मां साधु कुरुष्व याचनां
न ते मयाऽतो गुरुता भविष्यति ॥ २२ ॥

तथा ब्रुवाणामपि धर्मवत्सलो
न च स्म सीतां नृवरो निनीषति ।
उवाच चैनां बहु संनिवर्तने
वने निवासस्य च दुःखितां प्रति ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
अयोध्याकाण्डे सप्तविंशः सर्गः ॥

आदितः श्लोकाः 3568. अयोध्याकाण्डे आदितः श्लोकाः 1213

## अष्टाविंशः सर्गः ॥ २८ ॥

### वनवासदुःखकथनम् ॥

स एवं ब्रुवतीं सीतां धर्मज्ञो धर्मवत्सलः ।
न नेतुं कुरुते बुद्धिं वने दुःखानि चिन्तयन् ॥ १ ॥

सान्त्वयित्वा ततस्तां तु बाष्पदूषितलोचनाम् ।
निवर्तनार्थे धर्मात्मा वाक्यमेतदुवाच ह ॥ २ ॥

सीते महाकुलीनाऽसि धर्मे च निरता सदा ।
इहाचर स्वधर्मं त्वं मम कृत्वा मनस्सुखम् ॥ ३ ॥

सीते यथा त्वां वक्ष्यामि तथा कार्यं त्वयाऽबले ।
वने दोषा हि बहवो वदतस्तान्निबोध मे ॥ ४ ॥

सीते विमुच्यतामेषा वनवासकृता मतिः ।
बहुदोषं हि कान्तारं वनमित्यभिधीयते ॥ ५ ॥

हितबुद्ध्या खलु वचो मयैतदभिधीयते ।
सदा सुखं न जानामि दुःखमेव सदा वनम् ॥ ६ ॥

गिरिनिर्झरसंभूता गिरिकन्दरवासिनाम् ।
सिंहानां निनदा दुःखाः श्रोतुं दुःखमतो वनम् ॥ ७ ॥

क्रीडमानाश्च विस्रब्धा मत्ताश्शून्ये महामृगाः ।
दृष्ट्वा समभिवर्तन्ते सीते दुःखमतो वनम् ॥ ८ ॥

सग्रहास्सरितश्चैव पङ्कवत्यश्च दुस्तराः ।
मत्तैरपि गजैर्नित्यं सीते दुःखमतो वनम् ॥ ९ ॥

लताकण्टकसङ्कीर्णाः कृकवाकूपनादिताः ।
निरपाश्च सुदुर्गाश्च मार्गा दुःखमतो वनम् ॥ १० ॥

सुप्यते पर्णशय्यासु स्वयं भग्नासु भूतले ।
रात्रिषु श्रमखिन्नेन सीते दुःखमतो वनम् ॥ ११ ॥

अहोरात्रं च सन्तोषः कर्तव्यो नियतात्मना ।
फलैर्वृक्षावपतितैः सीते दुःखमतो वनम् ॥ १२ ॥

उपवासश्च कर्तव्यो यथाप्राणेन मैथिलि ।
जटाभारश्च कर्तव्यो वल्कलाम्बरधारिणा ॥ १३ ॥

देवतानां पितॄणां च कर्तव्यं विधिपूर्वकम् ।
प्राप्तानामतिथीनां च नित्यशः प्रतिपूजनम् ॥ १४ ॥

कार्यस्त्रिरभिषेकश्च काले काले च नित्यशः ।
चरता नियमेनैव तस्माद्दुःखतरं वनम् ॥ १५ ॥

उपहारश्च कर्तव्यः कुसुमैः स्वयमाहृतैः ।
आर्षेण विधिना वेद्यां बाले दुःखमतो वनम् ॥ १६ ॥

यथालब्धेन कर्तव्यः सन्तोषस्तेन मैथिलि ।
यताहारैर्वनचरैर्नित्यं दुःखमतो वनम् ॥ १७ ॥

अतीव वातास्तिमिरं बुभुक्षा चात्र नित्यशः ।
भयानि च महान्त्यत्र ततो दुःखतरं वनम् ॥ १८ ॥

सरीसृपाश्च बहवो बहुरूपाश्च भामिनि ।
चरन्ति पृथिवीं दर्पात्ततो दुःखतरं वनम् ॥ १९ ॥

नदीनिलयनास्सर्पा नदीकुटिलगामिनः ।
तिष्ठन्त्यावृत्य पन्थानं ततो दुःखतरं वनम् ॥ २० ॥

पतङ्गा वृश्चिकाः कीटा दंशाश्च मशकैस्सह ।
बाधन्ते नित्यमबले सर्वं दुःखमतो वनम् ॥ २१ ॥

द्रुमाः कण्टकिनश्चैव कुशकाशाश्च भामिनि ।
वने व्याकुलशाखाग्रास्तेन दुःखतरं वनम् ॥ २२ ॥

कायक्लेशाश्च बहवो भयानि विविधानि च ।
अरण्यवासे वसतो दुःखमेव सदा वनम् ॥ २३ ॥

क्रोधलाभौ विमोक्तव्यौ कर्तव्या तपसे मतिः ।
न भेतव्यं च भेतव्ये नित्यं दुःखमतो वनम् ॥ २४ ॥

तदलं ते वनं गत्वा क्षमं न हि वनं तव ।
विमृशन्निह पश्यामि बहुदोषतरं वनम् ॥ २५ ॥

वनं तु नेतुं न कृता मतिस्तदा
बभूव रामेण तदा महात्मना ।
न तस्य सीता वचनं चकार तम्
ततोऽब्रवीद्राममिदं सुदुःखिता ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
अयोध्याकाण्डे अष्टाविंशः सर्गः ॥

आदितः श्लोकाः 3594 अयोध्याकाण्डे आदितः श्लोकाः 1239

## एकोनत्रिंशः सर्गः ॥ २९ ॥

### पुनरपि वननयनप्रार्थना ॥

एतत्तु वचनं श्रुत्वा सीता रामस्य दुःखिता ।
प्रसक्ताश्रुमुखी मन्दमिदं वचनमब्रवीत् ॥ १ ॥

ये त्वया कीर्तिता दोषा वने वस्तव्यतां प्रति ।
गुणानित्येव तान्मन्ये तव स्नेहपुरस्कृता ॥ २ ॥

मृगास्सिंहा गजाश्चैव शार्दूलाश्शरभास्तथा ।
पक्षिणस्सृमराश्चैव ये चान्ये वनचारिणः ॥ ३ ॥

अदृष्टपूर्वरूपत्वात्सर्वे ते तव राघव ।
रूपं दृष्ट्वाऽपसर्पेयुर्भये सर्वे हि बिभ्यति ॥ ४ ॥

त्वया च सह गन्तव्यं मया गुरुजनाज्ञया ।
त्वद्वियोगेन मे राम त्यक्तव्यमिह जीवितम् ॥ ५ ॥

न हि मां त्वत्समीपस्थामपि शक्नोति राघव ।
सुराणामीश्वरः शक्रः प्रधर्षयितुमोजसा ॥ ६ ॥

पतिहीना तु या नारी सा न शक्ष्यति जीवितुम् ।
काममेवंविधं राम त्वया मम विदर्शितम् ॥ ७ ॥

अथवाऽपि महाप्राज्ञ ब्राह्मणानां मया श्रुतम् ।
पुरा पितृगृहे सत्यं वस्तव्यं किल मे वने ॥ ८ ॥

लक्षणिभ्यो द्विजातिभ्यः श्रुत्वाऽहं वचनं गृहे ।
वनवासकृतोत्साहा नित्यमेव महाबल ॥ ९ ॥

आदेशो वनवासस्य प्राप्तव्यः स मया किल ।
सा त्वया सह तत्राहं यास्यामि प्रिय नान्यथा ॥ १० ॥

कृतादेशा भविष्यामि गमिष्यामि सह त्वया ।
कालश्चायं समुत्पन्नः सत्यवाग्भवतु द्विजः ॥ ११ ॥

वनवासे हि जानामि दुःखानि बहुधा किल ।
प्राप्यन्ते नियतं वीर पुरुषैरकृतात्मभिः ॥ १२ ॥

कन्यया च पितुर्गेहे वनवासः श्रुतो मया ।
भिक्षिण्यास्साधुवृत्ताया मम मातुरिहाग्रतः ॥ १३ ॥

प्रसादितश्च वै पूर्वं त्वं वै बहुविधं प्रभो ।
गमनं वनवासस्य काङ्क्षितं हि सह त्वया ॥ १४ ॥

कृतक्षणाऽहं भद्रं ते गमनं प्रति राघव ।
वनवासस्य शूरस्य चर्या हि मम रोचते ॥ १५ ॥

शुद्धात्मन् प्रेमभावाद्धि भविष्यामि विकल्मषा ।
भर्तारमनुगच्छन्ती भर्ता हि मम दैवतम् ॥ १६ ॥

प्रेत्यभावेऽपि कल्याणस्सङ्गमो मे सह त्वया ॥ १७ ॥

पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
पुत्रा रक्षन्ति वार्धक्ये न स्त्री स्वातन्त्र्यमर्हति ॥ १८ ॥

श्रुतिर्हि श्रूयते पुण्या ब्राह्मणानां यशस्विनाम् ।
इह लोके च पितृभिर्या स्त्री यस्य महामते ।
अद्भिर्दत्ता स्वधर्मेण प्रेत्यभावेऽपि तस्य सा ॥ १९ ॥

एवमस्मात्स्वकां नारीं सुवृत्तां हि पतिव्रताम् ।
नाभिरोचयसे नेतुं त्वं मां केनेह हेतुना ॥ २० ॥
भक्तां पतिव्रतां दीनां मां समां सुखदुःखयोः ।
नेतुमर्हसि काकुत्स्थ समानसुखदुःखिनीम् ॥ २१ ॥
यदि मां दुःखितामेवं वनं नेतुं न चेच्छसि ।
विषमग्निं जलं वाऽहमास्थास्ये मृत्युकारणात् ॥ २२ ॥
एवं बहुविधं तं सा याचते गमनं प्रति ।
नानुमेने महाबाहुस्तां नेतुं विजनं वनम् ॥ २३ ॥
एवमुक्ता तु सा चिन्तां मैथिली समुपागता ।
स्नापयन्तीव गामुष्णैरश्रुभिर्नयनच्युतैः ॥ २४ ॥
चिन्तयन्तीं तथा तां तु निवर्तयितुमात्मवान् ।
क्रोधाविष्टां तु वैदेहीं काकुत्स्थो बह्वसान्त्वयत् ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
अयोध्याकाण्डे एकोनत्रिंशः सर्गः ॥

आदितः श्लोकाः 3619 अयोध्याकाण्डे आदितः श्लोकाः 1264

## त्रिंशः सर्गः ॥ ३० ॥

वनानुगमनाभ्यनुज्ञा ॥

सान्त्व्यमाना तु रामेण मैथिली जनकात्मजा ।
वनवासनिमित्ताय भर्तारमिदमब्रवीत् ॥ १ ॥
सा तमुत्तमसंविग्ना सीता विपुलवक्षसम् ।
प्रणयाच्चाभिमानाच्च परिचिक्षेप राघवम् ॥ २ ॥

किं त्वाऽमन्यत वैदेहः पिता मे मिथिलाधिपः ।
राम जामातरं प्राप्य स्त्रियं पुरुषविग्रहम् ॥ ३ ॥

अनृतं बत लोकोऽयमज्ञानाद्यद्धि वक्ष्यति ।
तेजो नास्ति परं रामे तपतीव दिवाकरे ॥ ४ ॥

किं हि कृत्वा विषण्णस्त्वं कुतो वा भयमस्ति ते ।
यत्परित्यक्तुकामस्त्वं मामनन्यपरायणाम् ॥ ५ ॥

द्युमत्सेनसुतं वीर सत्यवन्तमनुव्रताम् ।
सावित्रीमिव मां विद्धि त्वमात्मवशवर्तिनीम् ॥ ६ ॥

न त्वहं मनसाऽप्यन्यं द्रष्टास्मि त्वदृतेऽनघ ।
त्वया राघव गच्छेयं यथाऽन्या कुलपांसनी ॥ ७ ॥

स्वयं तु भार्यां कौमारीं चिरमध्युषितां सतीम् ।
शैलूष इव मां राम परेभ्यो दातुमिच्छसि ॥ ८ ॥

यस्य पथ्यं च रामात्थ यस्य चार्थेऽवरुध्यसे ।
त्वं तस्य भव वश्यश्च विधेयश्च सदाऽनघ ॥ ९ ॥

स मामनादाय वनं न त्वं प्रस्थातुमर्हसि ।
तपो वा यदि वाऽरण्यं स्वर्गो वा स्यात्सह त्वया ॥ १० ॥

न च मे भविता तत्र कश्चित्पथि परिश्रमः ।
पृष्ठतस्तव गच्छन्त्या विहारशयनेष्विह ॥ ११ ॥

कुशकाशशरेषीका ये च कण्टकिनो द्रुमाः ।
तूलाजिनसमस्पर्शा मार्गे मम सह त्वया ॥ १२ ॥

महावातसमुद्धूतं यन्मामपकरिष्यति ।
रजो रमण तन्मन्ये परार्ध्यमिव चन्दनम् ॥ १३ ॥

शाद्वलेषु यथा शिश्ये वनान्ते वनगोचर ।
कुथास्तरणतल्पेषु किं स्यात्सुखतरं ततः ॥ १४ ॥

पत्रं मूलं फलं यत्त्वमल्पं वा यदि वा बहु ।
दास्यसि स्वयमाहृत्य तन्मेऽमृतरसोपमम् ॥ १५ ॥

न मातुर्न पितुस्तत्र स्मरिष्यामि न वेश्मनः ।
आर्तवान्युपभुञ्जाना पुष्पाणि च फलानि च ॥ १६ ॥

न च तत्र गतः किञ्चिद्द्रष्टुमर्हसि विप्रियम् ।
मत्कृते न च ते शोको न भविष्यामि दुर्भरा ॥ १७ ॥

यस्त्वया सह स स्वर्गो निरयो यस्त्वया विना ।
इति जानन्परां प्रीतिं गच्छ राम मया सह ॥ १८ ॥

अथ मामेवमव्यग्रां वनं नैव नयिष्यसि ।
विषमद्यैव पास्यामि मा गमं द्विषतां वशम् ॥ १९ ॥

पश्चादपि हि दुःखेन मम नैवास्ति जीवितम् ।
उज्झितायास्त्वया नाथ तदैव मरणं वरम् ॥ २० ॥

इमं हि सहितुं शोकं मुहूर्तमपि नोत्सहे ।
किं पुनर्दश वर्षाणि त्रीणि चैकं च दुःखिता ॥ २१ ॥

इति सा शोकसन्तप्ता विलप्य करुणं बहु ।
चुक्रोश पतिमायस्ता भृशमालिङ्ग्य सस्वरम् ॥ २२ ॥

सा विद्धा बहुभिर्वाक्यैर्दिग्धैरिव गजाङ्गना ।
चिरसंनियतं बाष्पं मुमोचाग्निमिवारणिः ॥ २३ ॥

तस्याः स्फटिकसङ्काशं वारि सन्तापसम्भवम् ।
नेत्राभ्यां परिसुस्राव पङ्कजाभ्यामिवोदकम् ॥ २४ ॥

तच्चैवामलचन्द्राभं मुखमायतलोचनम् ।
पर्यशुष्यत बाष्पेण जलोद्धृतमिवाम्बुजम् ॥ २५ ॥

तां परिष्वज्य बाहुभ्यां विसंज्ञामिव दुःखिताम् ।
उवाच वचनं रामः परिविश्वासयंस्तदा ॥ २६ ॥

न देवि तव दुःखेन स्वर्गमप्यभिरोचये ।
न हि मेऽस्ति भयं किञ्चित्स्वयम्भोरिव सर्वतः ॥ २७ ॥

तव सर्वमभिप्रायमविज्ञाय शुभानने ।
वासं न रोचयेऽरण्ये शक्तिमानपि रक्षणे ॥ २८ ॥

यत्सृष्टाऽसि मया सार्धं वनवासाय मैथिलि ।
न विहातुं मया शक्या प्रीतिरात्मवता यथा ॥ २९ ॥

धर्मस्तु गजनासोरु सद्भिराचरितः पुरा ।
तं चाहमनुवर्तेऽद्य यथा सूर्यं सुवर्चला ॥ ३० ॥

न खल्वहं न गच्छेयं वनं जनकनन्दिनि ।
वचनं तन्नयति मां पितुस्सत्योपबृंहितम् ॥ ३१ ॥

एष धर्मस्तु सुश्रोणि पितुर्मातुश्च वश्यता ।
आज्ञामहं व्यतिक्रम्य नाऽहं जीवितुमुत्सहे ॥ ३२ ॥

अस्वाधीनं कथं दैवं प्रकारैरभिराध्यते ।
स्वाधीनं समतिक्रम्य मातरं पितरं गुरुम् ॥ ३३ ॥

यत्र तत्र त्रयो लोकाः पवित्रं तत्समं भुवि ।
नान्यदस्ति शुभापाङ्गे तेनेदमभिराध्यते ॥ ३४ ॥

न सत्यं दानमानौ वा न यज्ञाश्चाप्तदक्षिणाः ।
तथा बलकरास्सीते यथा सेवा पितुर्हिता ॥ ३५ ॥

स्वर्गो धनं वा धान्यं वा विद्याः पुत्राः सुखानि च ।
गुरुवृत्त्यनुरोधेन न किञ्चिदपि दुर्लभम् ॥ ३६ ॥

देवगन्धर्वगोलोकान् ब्रह्मलोकांस्तथा नराः ।
प्राप्नुवन्ति महात्मानो मातापितृपरायणाः ॥ ३७ ॥

स मां पिता यथा शास्ति सत्यधर्मपथे स्थितः ।
तथा वर्तितुमिच्छामि स हि धर्मस्सनातनः ॥ ३८ ॥

मम सन्ना मतिस्सीते त्वां नेतुं दण्डकावनम् ।
वसिष्यामीति सा त्वं मामनुयातुं सुनिश्चिता ॥ ३९ ॥

सा हि सृष्टाऽनवद्याङ्गि वनाय मदिरेक्षणे ।
अनुगच्छस्व मां भीरु सहधर्मचरी भव ॥ ४० ॥

सर्वथा सदृशं सीते मम स्वस्य कुलस्य च ।
व्यवसायमनुप्राप्ता कान्ते त्वमतिशोभनम् ॥ ४१ ॥

आरभस्व शुभश्रोणि वनवासक्षमाः क्रियाः ।
नेदानीं त्वदृते सीते स्वर्गोऽपि मम रोचते ॥ ४२ ॥

ब्राह्मणेभ्यश्च रत्नानि भिक्षुकेभ्यश्च भोजनम् ।
देहि चाशंसमानेभ्यः संत्वरस्व च मा चिरम् ॥ ४३ ॥

भूषणानि महार्हाणि वरवस्त्राणि यानि च ।
रमणीयाश्च ये केचित् क्रीडार्थाश्चाप्युपस्कराः ॥ ४४ ॥

शयनीयानि यानानि मम चान्यानि यानि च ।
देहि स्वभृत्यवर्गस्य ब्राह्मणानामनन्तरम् ॥ ४५ ॥

अनुकूलन्तु सा भर्तुर्ज्ञात्वा गमनमात्मनः ।
क्षिप्रं प्रमुदिता देवी दातुमेवोपचक्रमे ॥ ४६ ॥

ततः प्रहृष्टा प्रतिपूर्णमानसा
यशस्विनी भर्तुरवेक्ष्य भाषितम् ।
धनानि रत्नानि च दातुमङ्गना
प्रचक्रमे धर्मभृतां मनस्विनी ॥ ४७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
अयोध्याकाण्डे त्रिंशः सर्गः ॥

आदितः श्लोकाः **3666** अयोध्याकाण्डे आदितः श्लोकाः **1311**

इत्यार्षे श्रीमद्रामायणे पञ्चमेऽह्नि वर्तमानकथाप्रसङ्गः ॥

[पुरा कुशलवाभ्यां श्रीरामसन्निधावश्वमेधयज्ञवाटे द्वात्रिंशति दिनेषु गीते श्रीमद्रामायणे षष्ठेऽह्नि अयोध्याकाण्डे एकत्रिंशसर्गमारभ्य एकपञ्चाशसर्गपर्यन्तं (3667—4381 श्लोकाः) गीतम्। तस्मिन् दिने गीताः श्लोकाः 715]

## एकत्रिंशः सर्गः ॥ ३१ ॥

लक्ष्मणानुगमनाभ्यनुज्ञा ॥

एवं श्रुत्वा तु संवादं लक्ष्मणः पूर्वमागतः।
बाष्पपर्याकुलमुखः शोकं सोढुमशक्नुवन् ॥ १ ॥

स भ्रातुश्चरणौ गाढं निपीड्य रघुनन्दनः।
सीतामुवाचातियशा राघवं च महाव्रतम् ॥ २ ॥

यदि गन्तुं कृता बुद्धिर्वनं मृगगजायुतम्।
अहं त्वाऽनुगमिष्यामि वनमग्रे धनुर्धरः ॥ ३ ॥

मया समेतोऽरण्यानि बहूनि विचरिष्यसि।
पक्षिभिर्मृगयूथैश्च सङ्घुष्टानि समन्ततः ॥ ४ ॥

न देवलोकाक्रमणं नामरत्वमहं वृणे।
ऐश्वर्यं वाऽपि लोकानां कामये न त्वया विना ॥ ५ ॥

एवं ब्रुवाणः सौमित्रिर्वनवासाय निश्चितः।
रामेण बहुभिः सान्त्वैर्निषिद्धः पुनरब्रवीत् ॥ ६ ॥

अनुज्ञातश्च भवता पूर्वमेव यदस्म्यहम्।
किमिदानीं पुनरिदं क्रियते मे निवारणम् ॥ ७ ॥

यदर्थं प्रतिषेधो मे क्रियते गन्तुमिच्छतः।
एतदिच्छामि विज्ञातुं संशयो हि ममानघ ॥ ८ ॥
ततोऽब्रवीन्महातेजा रामो लक्ष्मणमग्रतः।
स्थितं प्राग्गामिनं वीरं याचमानं कृताञ्जलिम् ॥ ९ ॥
स्निग्धो धर्मरतो वीरः सततं सत्पथे स्थितः।
प्रियः प्राणसमो वश्यो भ्राता चासि सखा च मे ॥
मयाऽद्य सह सौमित्रे त्वयि गच्छति तद्वनम्।
को भरिष्यति कौसल्यां सुमित्रां वा यशस्विनीम् ॥
अभिवर्षति कामैर्यः पर्जन्यः पृथिवीमिव।
स कामपाशपर्यस्तो महातेजा महीपतिः ॥ १२ ॥
सा हि राज्यमिदं प्राप्य नृपस्याश्वपतेः सुता।
दुःखितानां सपत्नीनां न करिष्यति शोभनम् ॥ १३ ॥
न स्मरिष्यति कौसल्यां सुमित्रां च सुदुःखिताम्।
भरतो राज्यमासाद्य कैकेय्यां पर्यवस्थितः ॥ १४ ॥
तामार्यां स्वयमेवेह राजानुग्रहणेन वा।
सौमित्रे भर कौसल्यामुक्तमर्थमिमं चर ॥ १५ ॥
एवं मयि च ते भक्तिर्भविष्यति सुदर्शिता।
धर्मज्ञ गुरुपूजायां धर्मश्चाप्यतुलो महान् ॥ १६ ॥
एवं कुरुष्व सौमित्रे मत्कृते रघुनन्दन।
अस्माभिर्विप्रहीणाया मातुर्नो न भवेत्सुखम् ॥ १७ ॥
एवमुक्तस्तु रामेण लक्ष्मणः श्लक्ष्णया गिरा।
प्रत्युवाच तदा रामं वाक्यज्ञो वाक्यकोविदम् ॥ १८ ॥

तवैव तेजसा वीर भरतः पूजयिष्यति ।
कौसल्यां च सुमित्रां च प्रयतो नात्र संशयः ॥ १९ ॥

यदि दुष्टो न रक्षेत भरतो राज्यमुत्तमम् ।
प्राप्य दुर्मनसा वीर गर्वेण च विशेषतः ॥ २० ॥

तमहं दुर्मतिं क्रूरं वधिष्यामि न संशयः ।
तत्पक्ष्यानपि तान् सर्वांस्त्रैलोक्यमपि किं कृतम्॥ २१ ॥

कौसल्या बिभृयादार्या सहस्रमपि मद्विधान् ।
यस्याः सहस्रं ग्रामाणां संप्राप्तमुपजीवनम् ॥ २२ ॥

तदात्मभरणे चैव मम मातुस्तथैव च ।
पर्याप्ता मद्विधानां च भरणाय यशस्विनी ॥ २३ ॥

कुरुष्व मामनुचरं वैधर्म्यं नेह विद्यते ।
कृतार्थोऽहं भविष्यामि तव चार्थः प्रकल्पते ॥ २४ ॥

धनुरादाय सगुणं खनित्रपिटकाधरः ।
अग्रतस्ते गमिष्यामि पन्थानमनुदर्शयन् ॥ २५ ॥

आहरिष्यामि ते नित्यं मूलानि च फलानि च ।
वन्यानि यानि चान्यानि स्वाहाराणि तपस्विनाम् ॥
भवांस्तु सह वैदेह्या गिरिसानुषु रंस्यते ॥ २६ ॥

अहं सर्वं करिष्यामि जाग्रतः स्वपतश्च ते ।
रामस्त्वनेन वाक्येन सुप्रीतः प्रत्युवाच तम् ॥
व्रजापृच्छस्व सौमित्रे सर्वमेव सुहृज्जनम् ॥ २७ ॥

ये च राज्ञो ददौ दिव्ये महात्मा वरुणः स्वयम् ।
जनकस्य महायज्ञे धनुषी रौद्रदर्शने ॥
अभेद्ये कवचे दिव्ये तूणी चाक्षयसायकौ ॥ २८ ॥
आदित्यविमलौ चोभौ खड्गौ हेमपरिष्कृतौ ।
सत्कृत्य निहितं सर्वमेतदाचार्यसद्मनि ॥
स त्वमायुधमादाय क्षिप्रमाव्रज लक्ष्मण ॥ २९ ॥
स सुहृज्जनमामन्त्र्य वनवासाय निश्चितः ।
इक्ष्वाकुगुरुमागम्य जग्राहायुधमुत्तमम् ॥ ३० ॥
तद्दिव्यं रघुशार्दूलः सत्कृतं माल्यभूषितम् ।
रामाय दर्शयामास सौमित्रिः सर्वमायुधम् ॥ ३१ ॥
तमुवाचात्मवान् रामः प्रीत्या लक्ष्मणमागतम् ।
काले त्वमागतः सौम्य काङ्क्षिते मम लक्ष्मण ॥ ३२ ॥
अहं प्रदातुमिच्छामि यदिदं मामकं धनम् ।
ब्राह्मणेभ्यस्तपस्विभ्यस्त्वया सह परन्तप ॥ ३३ ॥
वसन्तीह दृढं भक्त्या गुरुषु द्विजसत्तमाः ।
तेषामपि च मे भूयः सर्वेषां चोपजीविनाम् ॥ ३४ ॥
वसिष्ठपुत्रं तु सुयज्ञमार्यं त्वमानयाशु प्रवरं द्विजानाम् ।
अभिप्रयास्यामि वनं समस्तानभ्यर्च्य शिष्टानपरान्द्विजातीन् ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
अयोध्याकाण्डे एकत्रिंशः सर्गः ॥

आदितः श्लोकाः 3701 अयोध्याकाण्डे आदितः श्लोकाः 1346

## द्वात्रिंशः सर्गः ॥ ३२ ॥

### यात्रादानम् ॥

ततः शासनमाज्ञाय भ्रातुः प्रियकरं शुभम् ।
गत्वा स प्रविवेशाशु सुयज्ञस्य निवेशनम् ॥ १ ॥

तं विप्रमग्न्यगारस्थं वन्दित्वा लक्ष्मणोऽब्रवीत् ।
सखेऽभ्यागच्छ पश्य त्वं वेश्म दुष्करकारिणः ॥ २ ॥

ततः सन्ध्यामुपास्याथ गत्वा सौमित्रिणा सह ।
जुष्टं तत्प्राविशल्लक्ष्म्या रम्यं रामनिवेशनम् ॥ ३ ॥

तमागतं वेदविदं प्राञ्जलिः सीतया सह ।
सुयज्ञमभिचक्राम राघवोऽग्निमिवार्चितम् ॥ ४ ॥

जातरूपमयैर्मुख्यैरङ्गदैः कुण्डलैः शुभैः ।
सहेमसूत्रैर्मणिभिः केयूरैर्वलयैरपि ॥ ५ ॥

अन्यैश्च रत्नैर्बहुभिः काकुत्स्थः प्रत्यपूजयत् ।
सुयज्ञं स तदोवाच रामः सीताप्रचोदितः ॥ ६ ॥

हारं च हेमसूत्रं च भार्यायै सौम्य हारय ।
रशनां चाधुना सीता दातुमिच्छति ते सखे ॥ ७ ॥

अङ्गदानि विचित्राणि केयूराणि शुभानि च ।
प्रयच्छति सखे तुभ्यं भार्यायै गच्छती वनम् ॥ ८ ॥

पर्यङ्कमग्र्यास्तरणं नानारत्नविभूषितम् ।
तमपीच्छति वैदेही प्रतिष्ठापयितुं त्वयि ॥ ९ ॥

नागः शत्रुञ्जयो नाम मातुलो यं ददौ मम ।
तं ते गजसहस्रेण ददामि द्विजपुङ्गव ॥ १० ॥

इत्युक्तः स तु रामेण सुयज्ञः प्रतिगृह्य तत् ।
रामलक्ष्मणसीतानां प्रयुयोजाशिषः शुभाः ॥ ११ ॥

अथ भ्रातरमव्यग्रं प्रियं रामः प्रियंवदम् ।
सौमित्रिं तमुवाचेदं ब्रह्मेव त्रिदशेश्वरम् ॥ १२ ॥

अगस्त्यं कौशिकं चैव तावुभौ ब्राह्मणोत्तमौ ।
अर्चयाहूय सौमित्रे रत्नैः सस्यमिवांबुभिः ॥ १३ ॥

तर्पयस्व महाबाहो गोसहस्रैश्च मानद ।
सुवर्णैः रजतैश्चैव मणिभिश्च महाधनैः ॥ १४ ॥

कौसल्यां च य आशीर्भिर्भक्तः पर्युपतिष्ठति ।
आचार्यस्तैत्तिरीयाणामभिरूपश्च वेदवित् ॥ १५ ॥

तस्य यानं च दासीश्च सौमित्रे सम्प्रदापय ।
कौशेयानि च वस्त्राणि यावत्तुष्यति स द्विजः ॥ १६ ॥

सूतश्चित्ररथश्चार्यः सचिवः सुचिरोषितः ।
तोषयैनं महार्हैश्च रत्नैर्वस्त्रैर्धनैस्तथा ॥
पशुकाभिश्च सर्वाभिर्गवां दशशतेन च ॥ १७ ॥

ये चेमे कठकालापा बहवो दण्डमाणवाः ।
नित्यस्वाध्यायशीलत्वान्नान्यत् कुर्वन्ति किञ्चन ॥

अलसाः स्वादुकामाश्च महतां चापि सम्मताः ।
तेषामशीतियानानि रत्नपूर्णानि दापय ॥ १९ ॥

शालिवाहसहस्रं च द्वे शते भद्रकांस्तथा ।
व्यञ्जनार्थं च सौमित्रे गोसहस्रमुपाकुरु ॥ २० ॥

मेखलीनां महासङ्घः कौसल्यां समुपस्थितः ।
तेषां सहस्रं सौमित्रे प्रत्येकं संप्रदापय ॥ २१ ॥

अम्बा यथा च सा नन्देत् कौसल्या मम दक्षिणाम् ।
तथा द्विजातींस्तान् सर्वाँल्लक्ष्मणार्चय सर्वशः ॥ २२ ॥

ततः स पुरुषव्याघ्रस्तद्धनं लक्ष्मणः स्वयम् ।
यथोक्तं ब्राह्मणेन्द्राणामददाद्धनदो यथा ॥ २३ ॥

अथाब्रवीद्बाष्पकलांस्तिष्ठतश्चोपजीविनः ।
संप्रदाय बहु द्रव्यमेकैकस्योपजीविनः ॥ २४ ॥

लक्ष्मणस्य च यद्वेश्म गृहं च यदिदं मम ।
अशून्यं कार्यमेकैकं यावदागमनं मम ॥ २५ ॥

इत्युक्त्वा दुःखितं सर्वं जनं तमुपजीविनम् ।
उवाचेदं धनाध्यक्षं धनमानीयतामिति ॥ २६ ॥

ततोऽस्य धनमाजह्रुः सर्वमेवोपजीविनः ।
स राशिः सुमहांस्तत्र दर्शनीयो ह्यदृश्यत ॥ २७ ॥

ततः स पुरुषव्याघ्रस्तद्धनं सहलक्ष्मणः ।
द्विजेभ्यो बालवृद्धेभ्यः कृपणेभ्यो ह्यदापयत् ॥ २८ ॥

तत्रासीत्पिङ्गलो गार्ग्यस्त्रिजटो नाम वै द्विजः ।
क्षतवृत्तिर्वने नित्यं फालकुद्दाललाङ्गली ॥ २९ ॥

तं वृद्धं तरुणी भार्या बालानादाय दारकान् ।
अब्रवीद्ब्राह्मणं वाक्यं दारिद्र्येणाभिपीडिता ॥ ३० ॥

अपास्य फालं कुद्दालं कुरुष्व वचनं मम ।
रामं दर्शय धर्मज्ञं यदि किञ्चिदवाप्स्यसि ॥ ३१ ॥

स भार्याया वचः श्रुत्वा शाटीमाच्छाद्य दुश्छदाम् ।
स प्रातिष्ठत पन्थानं यत्र रामनिवेशनम् ॥ ३२ ॥

भृग्वङ्गिरस्समं दीप्त्या त्रिजटं जनसंसदि ।
आ पञ्चमायाः कक्ष्याया नैनं कश्चिदवारयत् ॥ ३३ ॥

स राजपुत्रमासाद्य त्रिजटो वाक्यमब्रवीत् ।
निर्धनो बहुपुत्रोऽस्मि राजपुत्र महायशः ।
क्षतवृत्तिर्वने नित्यं प्रत्यवेक्षस्व मामिति ॥ ३४ ॥

तमुवाच ततो रामः परिहाससमन्वितम् ॥ ३५ ॥

गवां सहस्रमप्येकं न तु विश्राणितं मया ।
परिक्षिपसि दण्डेन यावत्तावदवाप्स्यसि ॥ ३६ ॥

स शाटीं त्वरितः कट्यां संभ्रान्तः परिवेष्टयताम् ।
आविध्य दण्डं चिक्षेप सर्वप्राणेन वेगितः ॥ ३७ ॥

स तीर्त्वा सरयूपारं दण्डस्तस्य कराच्च्युतः ।
गोव्रजे बहुसाहस्रे पपातोक्षणसन्निधौ ॥ ३८ ॥

तं परिष्वज्य धर्मात्मा आ तस्मात्सरयूतटात् ।
आनयामास ता गोपैस्त्रिजटायाश्रमं प्रति ॥ ३९ ॥

उवाच च ततो रामस्तं गार्ग्यमभिहर्षयन् ।
मन्युर्न खलु कर्तव्यः परिहासो ह्ययं मम ॥ ४० ॥

इदं हि तेजस्तव यद्दुरत्ययं तदेव जिज्ञासितुमिच्छता मया ।
इमं भवानर्थमभिप्रचोदितो वृणीष्व किञ्चेदपरं व्यवस्यति ॥

ब्रवीमि सत्येन न तेऽस्ति यन्त्रणा
धनं हि यद्यन्मम विप्रकारणात् ।
भवत्सु सम्यक् प्रतिपादनेन तत्
मयाऽऽर्जितं प्रीतियशस्करं भवेत् ॥ ४२ ॥

ततः सभार्यस्त्रिजटो महामुनिः
गवामनीकं प्रतिगृह्य मोदितः ।
यशोबलप्रीतिसुखोपबृंहणीः
तदाऽऽशिषः प्रत्यवदन्महात्मनः ॥ ४३ ॥

स चापि रामः परिपूर्णपौरुषो महद्धनं धर्मबलैरुपार्जितम् ।
नियोजयामास सुहृज्जने चिराद्यथार्हसंमानवचः प्रचोदितः ॥

द्विजः सुहृद्भृत्यजनोऽथ वा तदा दरिद्रभिक्षाचरणश्च यो भवेत् ।
न तत्र कश्चिन्न बभूव तर्पितो यथार्हसंमाननदानसंभ्रमैः ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
अयोध्याकाण्डे द्वात्रिंशः सर्गः ॥

आदितः श्लोकाः 3746 अयोध्याकाण्डे आदितः श्लोकाः 1391

## त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

### दशरथदर्शनाय श्रीरामागमनम् ॥

दत्त्वा तु सह वैदेह्या ब्राह्मणेभ्यो धनं बहु ।
जग्मतुः पितरं द्रष्टुं सीतया सह राघवौ ॥ १ ॥

ततो गृहीते दुष्प्रेक्षे त्वशोभेतां तदायुधे ।
मालादामभिराबद्धे सीतया समलंकृते ॥ २ ॥

ततः प्रासादहर्म्याणि विमानशिखराणि च ।
अधिरुह्य जनः श्रीमानुदासीनो व्यलोकयत् ॥ ३ ॥

न हि रथ्याः स्म शक्यन्ते गन्तुं बहुजनाकुलाः ।
आरुह्य तस्मात् प्रासादादीनाः पश्यन्ति राघवम् ॥ ४ ॥

पदातिं वर्जितच्छत्रं रामं दृष्ट्वा तदा जनाः ।
ऊचुर्बहुविधा वाचः शोकोपहतचेतसः ॥ ५ ॥

यं यान्तमनुयाति स्म चतुरङ्गबलं महत् ।
तमेकं सीतया सार्धमनुयाति स्म लक्ष्मणः ॥ ६ ॥

ऐश्वर्यस्य रसज्ञः सन् कामिनां चैव कामदः ।
नेच्छत्येवानृतं कर्तुं पितरं धर्मगौरवात् ॥ ७ ॥

या न शक्या पुरा द्रष्टुं भूतैराकाशगैरपि ।
तामद्य सीतां पश्यन्ति राजमार्गगता जनाः ॥ ८ ॥

अङ्गरागोचितां सीतां रक्तचन्दनसेविनीम् ।
वर्षमुष्णं च शीतं च नेष्यन्त्याशु विवर्णताम् ॥ ९ ॥

